श्री० प ॥ सप्तस्वराख्येनातिशुद्धं ॥ १७ ॥ ...

१४ ॥ १४ ॥ अक्षमालांकुशधरा वीणापुस्तकं

धारिणी ॥ सा च भववृन्दनारीनामान्यस्यैच

सादरा ॥ १५ ॥ महाविद्यामहावाणीभारती

वाक्सरस्वती ॥ आर्याब्राह्मीकामधेनुर्वेदग

र्भा च धीश्वरी ॥ १६ ॥ अथोवाच महाल

क्ष्मीर्महाकालीं सरस्वतीम् ॥ युवां जनयतां ११२

माम् ॥ ददामि तव नामानि यानि कर्माणि तानि च ॥ ११ ॥ महामाया महाकाली महामारी क्षुधा तृषा ॥ निद्रा तृष्णा चैकवीरा कालरात्रिर्दुरत्यया ॥ १२ ॥ इमानि तव नामानि प्रतिपाद्यानि कर्मभिः ॥ एभिः कर्माणि ते ज्ञात्वा योऽधीते सोऽश्नुते परम् ॥ १३ ॥
तामित्युक्त्वा महालक्ष्मी [illegible] परं नृ

देव्यौमिथुनेस्वानुरूपतः ॥ १७ ॥ इत्यु
क्त्वातेमहालक्ष्मीः ससर्जमिथुनंस्वयम् ॥
हिरण्यगर्भौरुचिरौस्त्रीपुंसौकमलासनौ ॥
॥ १८ ॥ ब्रह्मन्विधेविरंचेतिधातारित्याह
तंनरम् ॥ श्रीःपद्मेकमले लक्ष्मीत्याहमा
तास्त्रियंचताम् ॥ १९ ॥ महाकालीभारती
चमिथुनंसृजतः सह ॥ एतयोरपिरूपाणि

भा० नामानिचवदामिते ॥ २० ॥ नीलकंठरक्त र०
१९ बाहुंश्वेतांगंचंद्रशेखरम् ॥ जनयामासपुरु
षंमहाकालीसितांस्त्रियम् ॥ २१ ॥ सरुद्रः
शंकरःस्थाणुःकपर्दीचत्रिलोचनः ॥ त्रयी
विद्या कामधेनुः सास्त्रीभाषाऽक्षरास्वरा ॥
॥ २२ ॥ सरस्वतीस्त्रियंगौरींकृष्णंचपुरुषं १९३
नृप ॥ जनयामासनामानितयोरपिवदामि

ते ॥ २३॥ विष्णुः कृष्णोहृषीकेशोवासु
देवोजनार्दनः ॥ उमागौरी सतीचंडीसुं
दरी सुभगा शुभा ॥ २४ ॥ एवं युव
तयःसद्यःपुरुषत्वंप्रपेदिरे ॥ चक्षुष्मंतो
नुपश्यंतिनेतरेऽतद्विदोजनाः ॥ २५ ॥
ब्रह्मणे प्रददौ पत्नीं महालक्ष्मींनृपत्रयीम्॥
रुद्रायगौरीं वरदां वासुदेवाय च श्रियम् ॥

श्रा० ॥ २६ ॥ स्वरयासहसंभूयोविरिंचोऽडमर्जीजनत् ॥ बिभेदभगवान्रुद्रस्तद्गौर्यासह १० ११ ११४
वीर्यवान् ॥ २७ ॥ अंडमध्येप्रधानादिकार्यजातमभून्नृप ॥ महाभूतात्मकंसर्वंजगत्स्थावरजंगमम् ॥ २८ ॥ पुपोषपालयामासतल्लक्ष्म्यासहकेशवः ॥ संजहारजगत्सर्वंसहगौर्यामहेश्वरः ॥ २९ ॥ महालक्ष्मी

महाराजसर्वसत्त्वमयीश्वरी ॥ निराकारा
चसाकारासैवनानाभिधानभृत् ॥ ३० ॥
नामांतैर्निरूप्यैषा नाम्नानान्येनकेनचिं
त् ॥ ३१ ॥ ॥ ॥ इति प्राधानिकरहस्यं
समाप्तम् ॥



॥ श्रीः ॥ ऋषिरुवाच ॥ ॥ त्रिगुणा
तामसीदेवीसात्त्विकीयात्वयोदिता ॥ सा
शर्वाचंडिकादुर्गाभद्राभगवतीर्यते ॥ १ ॥
योगनिद्राहरेरुक्ता महाकालीतमोगुणा ॥
मधुकैटभनाशार्थं यां तुष्टावांबुजासनः ॥
॥ २ ॥ दशवक्त्रादशभुजादशपादांजनप्र
भा ॥ विशालयाराजमानात्रिंशल्लोचनमा

वै० लया ॥ ३ ॥ स्फुरद्दशनदंष्ट्रासाभीमरूपा र०
१९७ पिभूमिप ॥ रूपसौभाग्यकांतीनांसाप्रति
ष्ठामहाश्रियाम् ॥ ४ ॥ खड्गबाणगदाशूलशं
खचक्रभुशुंडिभृत् ॥ परिघंकार्मुकंशीर्षंनि
श्चोतद्रुधिरंदधौ ॥ ५ ॥ एषासावैष्णवीमा
यामहाकालीदुरत्यया ॥ आराधितावशीकु १९७
र्यात्पूजाकर्तुश्चराचरम् ॥ ६ ॥ सर्वदेवशरीरे

भ्यायाविभूतामितप्रभा ॥ त्रिगुणासामहा
लक्ष्मीःसाक्षान्महिषमर्दिनी ॥ ७ ॥ श्वेता
ननानीलभुजासुश्वेतस्तनमंडला ॥ रक्त
मध्या रक्तपादानीलजंघोरुरुन्मदा ॥ ८ ॥
सुचित्रजघना चित्रमाल्यांबरविभूषणा ॥
चित्रानुलेपनाकांतिरूपसौभाग्यशालिनी
॥ ९ ॥ अष्टादशभुजापूज्यासासहस्रभुजा

सती ॥ आयुधान्यत्रवक्ष्यंतेदक्षिणाधः
करक्रमात् ॥ १० ॥ अक्षमालाचकमलं
बाणोसिःकुलिशंगदा ॥ चक्रंत्रिशूलपरशुः
शंखोघंटाचपाशकः ॥ ११ ॥ शक्तिर्दंडश्च
र्मचापंपानपात्रंकमंडलुः ॥ अलंकृतभुजा
मेभिरायुधैःकमलासनाम् ॥ १२ ॥ सर्वदेव
मयीमीशांमहालक्ष्मीमिमांनृप ॥ पूज

येत्सर्वलोकानां स देवानां प्रभुर्भवेत् ॥
॥ १३ ॥ गौरीदेहात्समुद्भूतायासत्त्वैक
गुणाश्रया ॥ साक्षात्सरस्वतीप्रोक्ताशुंभा
सुरनिबर्हिणी ॥१४॥ दधौचाष्टभुजाबाणा
न्मुसलंशूलचक्रभृत् ॥ शंखंघंटांलांगलंच
कार्मुकंवसुधाधिप ॥१५॥ एषासंपूजिता
भक्त्यासर्वज्ञत्वंप्रयच्छति ॥ निशुंभमथि

नीदेवीशुंभासुरनिबर्हिणी ॥ १६ ॥ इत्यु

क्तानिस्वरूपाणि मूर्तीनांतवपार्थिव ॥ उ
पासनं जगन्मातुःपृथगासां निशामय ॥
॥ १७ ॥ महालक्ष्मीर्यदापूज्यामहाकाली
सरस्वती ॥ दक्षिणोत्तरयोः पूज्येपृष्ठतो
मिथुनत्रयम् ॥१८॥ विरंचिःस्वरयामध्ये
रुद्रोगौर्याचदक्षिणे ॥ वामेलक्ष्म्याहृषी

केशःपुरतोदेवतात्रयम् ॥ १९ ॥ अष्टादश
भुजामध्येवामेचास्यादशानना ॥ दक्षिणे
ष्टभुजालक्ष्मीर्महतीतिसमर्चयेत् ॥ २० ॥
पूर्वादिदलतः पूज्याअसितांगादिभैरवाः ॥
अष्टादशभुजाचैषा यदापूज्या नराधिप ॥
॥ २१ ॥ दशाननाचाष्टभुजादक्षिणोत्तरयो
स्तदा ॥ दशाननायदापूज्यादक्षिणोत्तर

वै०
२००
योस्तदा॥२२॥ कालमृत्यूचसंपूज्यौसर्वा २०
रिष्टप्रशांतये ॥ यदाचाष्टभुजापूज्याशुं
भासुरनिबर्हिणी ॥ २३ ॥ नवास्याःशक्त
यः पूज्यास्तदारुद्रविनायकौ ॥ नमोदेव्या
इतिस्तोत्रैर्महालक्ष्मींसमर्चयेत् ॥ २४ ॥
अवतारत्रयार्चायां स्तोत्रमंत्रास्तदाश्र २००
याः ॥ अष्टादशभुजाचैषापूज्यामहिषम

र्दिनी ॥ २५ ॥ महालक्ष्मीर्महाकालीसैव
प्रोक्तासरस्वती ॥ ईश्वरीपुण्यपापानांसर्व
लोकमहेश्वरी ॥ २६ ॥ महिषांतकरीयेन
पूजितासजगत्प्रभुः ॥ पूजयेज्जगतांधात्रीं
चण्डिकांभक्तवत्सलाम् ॥ २७ ॥ अर्घा
दिभिरलंकारैर्गंधपुष्पैस्तथोत्तमैः ॥ धूपै
र्दीपैश्चनैवेद्यैर्नानाभक्ष्यसमन्वितैः ॥ २८ ॥

वै० रुधिराक्तेनबलिनामांसेनसुरयानृप ॥ बलि २०
२०१ मांसादिपूजेयंविप्रवर्ज्यामयेरिता ॥ २९ ॥
तेषांकिलसुरामांसैर्नोक्तापूजानृपक्वचित् ।
प्रणामाचमनीयैश्चचंदनेन सुगंधिना ॥
॥ ३० ॥ सकर्पूरैश्चतांबूलैर्भक्तिभावसम
न्वितैः ॥ वामभागेग्रतोदेव्याश्छिन्नशीर्षंम २०१
हासुरम् ॥ ३१ ॥ पूजयेन्महिषंयेनप्राप्तंसा

यूज्यमीशया ॥ दक्षिणेपुरतःसिंहंसमग्रंध
मीश्वरम् ॥ ३२ ॥ वाहनंपूजयेद्देव्याधृतं
येनचराचरम् ॥ ततः कृतांजलिर्भूत्वास्तु
वीतचरितैरिमैः ॥ ३३ ॥ एकेनवामध्यमेन
नैकेनेतरयोरिह ॥ चरितार्धे तुनजपेज्जपं
श्छिद्रमवाप्नुयात् ॥ ३४ ॥ स्तोत्रमंत्रैःस्तुवी
तेमांयदिवाजगदंबिकाम् ॥ प्रदक्षिणानम

स्कारान्कृत्वामूर्ध्नीकृतांजलिः ॥ ३५ ॥ क्षमा
पयेज्जगद्धात्रींमुहुर्मुहुरतंद्रितः ॥ प्रतिश्लो
कंचजुहुयात्पायसंतिलसर्पिषा ॥ ३६ ॥
जुहुयात्स्तोत्रमंत्रैर्वाचंडिकायैशुभंहविः ॥
भूयोनामपदैर्देवीं पूजयेत्सुसमाहितः ॥
॥ ३७ ॥ प्रयतःप्रांजलिः प्रह्वःप्राणानारो
प्यचात्मनि ॥ सुचिरंभावयेद्देवींचंडिकां

तन्मयोभवेत् ॥ ३८ ॥ एवंयःपूजयेद्भ
क्त्याप्रत्यहंपरमेश्वरीम् ॥ भुक्त्वाभोगा
न्यथाकामंदेवीसायुज्यमाप्नुयात्॥ ३९ ॥
योनपूजयतेनित्यंचंडिकां भक्तवत्सलाम्।
भस्मीकृत्यास्यपुण्यानि निर्दहेत्परमेश्वरी
॥ ४० ॥ तस्मात्पूजयभूपालसर्वलोक
महेश्वरीम् ॥ यथोक्तेनविधानेनचंडिकांसु

वै० स्वमाप्स्यसि ॥४१॥ इति वैकृतिकरहस्यं २०
२०३ समाप्तम् ॥



२०३